# भारती

अंक : 1 १९८८

संपादक
आचार्य रामदेव त्रिपाठी

बिहार संस्कृत अकादमी
पटना
1988

# भारती

प्रधान संपादक
प्रोफेसर (डॉ०) फणीन्द्रनाथ ओझा

संपादक
आचार्य रामदेव त्रिपाठी



बिहार संस्कृत अकादमी पटना

# प्रधान सम्पादक की टिप्पणी

बिहार के गौरवशाली संस्कृत की परम्परा को अक्षुण्ण रखने तथा इसके उन्नयन एवं प्रचार प्रसार के लिए बिहार राज्य सरकार ने बिहार संस्कृत अकादमी का गठन 28 फरवरी 1987 को किया। यद्यपि इस अकादमी की गठन सम्बन्धी प्रक्रिया 1980-81 से ही चल रही थी, किन्तु भूतपूर्व शिक्षा मंत्री लोकेश नाथ झा के प्रयास के फलस्वरूप कार्य रूप में इसका गठन हो सका तथा मुझे इस अकादमी के अध्यक्ष सह सचिव के पद पर 28 फरवरी 1988 को नियुक्त किया गया। बिहार संस्कृत अकादमी के गठन के पीछे राज्य सरकार का उद्देश्य बिहार के गौरवशाली संस्कृत के अतीत की प्रतिष्ठा को पुनः प्राप्त करना है। इसके लिए संस्कृत के उच्चकोटि के विद्वानों को पुरस्कार, और संस्कृत के मेधावी छात्रों को छात्रवृत्ति प्रदान करना तथा संस्कृत वाङ्मय में शोधकार्य करने वाले व्यक्तियों के लिए एक समृद्ध पुस्तकालय का निर्माण आदि कई योजनायें इस अकादमी के विचाराधीन हैं, जिन्हें शीघ्र ही कार्य रूप में लाया जा रहा है।

संप्रति बिहार संस्कृत अकादमी को सम्यक् रूप से चलाने के लिए परामर्शदात्री समिति तथा संपादक मण्डल का गठन किया गया है। इसमें यह निर्णय लिया गया कि संस्कृत अकादमी एक मासिक शोध-पत्रिका का प्रकाशन करे जिसमें विश्रुत विद्वानों के संस्कृत वाङ्मय से सम्बद्ध लेख संस्कृत, हिन्दी अथवा अंग्रेजी भाषा में आमंत्रित किये जायें। प्रस्तुत **बिहार संस्कृत अकादमी पत्रिका "भारती"** का प्रवेशांक उसी का प्रतिफल है, जिसे संस्कृत दिवस पर प्रकाशित करते हुए मुझे परम हर्ष हो रहा है। इसका संपादन आचार्य रामदेव त्रिपाठी पूर्व प्राचार्य नेतरहाट उच्च विद्यालय ने किया है।

माननीय मुख्यमंत्री भागवत झा आजाद एवं माननीय मानव संसाधन विकास मंत्री डा० नागेन्द्र झा के हम वहुत आभारी हैं, जिनकी छत्रछाया में यह अकादमी निरन्तर अबाध गति से अपने लक्ष्य की ओर अग्रसर है।

इस संस्था के गठन में जिन संस्कृत प्रेमियों का सहयोग हमें प्राप्त होता है उनमें आचार्य देवेन्द्र नाथ शर्मा, अध्यक्ष, अन्तर विश्वविद्यालय बोर्ड, पटना, आचार्य रामदेव त्रिपाठी पूर्व प्राचार्य, नेतरहाट महा विद्यालय, पण्डित श्री निवास शर्मा शास्त्री पूर्व शोध सदस्य काशी प्रसाद जायसवाल, शोध संस्थान, पटना, डा० जगदीश्वर पाण्डेय काशी प्रसाद जायसवाल शोध संस्थान, पटना, डॉ० देवकान्त झा मैथिली अकादमी तथा डॉ० मिथिलेश कुमारी मिश्र, राष्ट्रभाषा परिषद् मुख्य हैं। अकादमी के स्थापना काल से ही इसके उत्थान एवं प्रगति में अन्य कई व्यक्तियों का सक्रिय सहयोग हमें निरन्तर प्राप्त होता रहा है, जिनमें भोजपुरी अकादमी के लेखापाल श्री ललन दुबे प्रमुख हैं।

हमें आशा है कि **"भारती"** शोध छात्रों, संस्कृत प्रेमियों एवं सामान्य पाठकों द्वारा समान रूप से समादृत होगी।

पटना
संस्कृत-दिवस
6-8-1988

**प्रो० फणीन्द्र नाथ ओझा**
अध्यक्ष सह सचिव
बिहार संस्कृत अकादमी, पटना

# संपादकीयम्

संस्कृत भाषाया महत्त्वम् अनिर्वचनीयम्। एषा न केवलम् आ कैलासाद् आ रामेश्वरम् असमात् च द्वारकां पञ्चनदं च यावत् प्रसृतस्य भारत-देशस्य प्रदेश-पुष्पाणि विविध-संस्कृतिसुरभितानि एकस्मिन् सूत्रे ग्रथ्नाति, "एतद्-देश-प्रसूतस्य सकाशादग्रजन्मनः, स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्व मानवाः" इति उच्चै घोषयन् समस्तां-वसुधामपि कुटुम्बयति। अतएव रूस देशाद् अमेरिका देशं फ्रान्स देशात् च जापान देशं यावत् सर्वेषु उन्नतिशीलेषु राष्ट्रेषु अस्याः स्वेच्छया अध्ययनम् उत्तरोत्तरं वर्धते। स्पर्धया ईर्ष्यया च परस्परं द्विषन्तोपि विभिन्न-समृद्धभाषा-भाषिणो देशाः संस्कृतं निर्विरोधं, निर्बाधं सादरं च पठन्ति। वेदानाम्, उपनिषदां, रामायण महाभारतयोः कालिदासादीनां कवीनां च कृते निखिलेपि भूमण्डले जिज्ञासा रुचिश्च दिने दिने समृध्यति। वस्तुत इदानीं संस्कृतं न केवल भारतस्य, अपितु भारतयूरोपीय भाषा परिवाराधिकृतस्य भूभागस्य, नहि नहि, समस्तस्य विश्वस्य एका आध्यात्मिक भाषा, विश्वभाषा मन्यते। हिन्दी भाषाया अपि अधिकं संमानास्पदं संस्कृतं जगति।

परं दुःखस्य इयं वार्ता यत् स्वतन्त्र भारते परतन्त्र भारतापेक्षया अपि संस्कृतस्य प्रतिदिनं ह्रास एव जायमानो दृश्यते। परतन्त्रे भारते राष्ट्रीयायाः संस्कृतेः भाषायाः च संरक्षणस्य उत्साहः, संकल्पः आसीत्। स्वतन्त्रे भारते पाश्चात्यायाः संस्कृतेः, भाषाया आहारविहारादेः, आचार विचारादेः च द्विगुणितेन उत्साहेन स्वीकारः दृश्यते। सर्वकारः आत्मानं धर्मनिरपेक्षं घोषयन् संस्कृतस्य प्रोत्साहनाद् बिभेति इव। एतद् न विचार्यते यत् काश्मीरतः केरलं यावत् क्षेत्रीयाणां आपाततः भाषा-परिधान-भोजन-वातावरणादीनां भेदानां दृष्ट्या भिन्नतया लक्ष्यमाणा अपि शतप्रायकोटिपरिमिता जनाः संस्कृत सरस्वतीपयः पानेन एव सोदरत्वम् प्राप्ताः तिष्ठन्ति। मातृभाषाया अथवा भाषामातुः एव अयं चमत्कारः। संस्कृतभाषाप्रवाहे शुष्के अस्माकम् एकता एव लुप्ता भविष्यति, अमरत्वं प्रेप्सवः सर्वे अपि भारतीयाम् इमां देवभाषां भाषितुम् मन्तुम् अध्येतुं च उत्काः।

इदानीं यावद् विहारे प्रवेशिकायां संस्कृतम् अनिवार्य-प्रायम् आसीत्। अधुना नवीन शिक्षा योजनायां भाषात्रयाध्यापन सिद्धान्ते एका मातृभाषा, एका राष्ट्रभाषा एका च दाक्षिणात्या अथवा उदींच्या भाषा आयान्ति। अत्र संस्कृतस्य किमपि स्थानं नास्ति, चर्चा न श्रूयते। चिन्तनीयम् एतद् यत् संस्कृतस्य परित्यागेन एकता-सूत्रं तु छिन्नं भवत्येव, भारतस्य समस्त प्रादेशिक भाषावद् उपर्युक्ता अपि तिस्रो भाषा निर्धना भविष्यन्ति।

संस्कृतं सर्वासामेतासां साक्षात् परंपरया वा पोषकं स्वकीयं निधानम् अस्ति अक्षयम्। छिन्ने मूले नैव शाखा, न पत्रम्। एषा हि सर्वस्य भारतस्य स्वकीया सांस्कृतिक भाषा, पैतृक भाषा, न कस्यापि राज्यस्य परकीया एषा। दाक्षिणात्याः सर्वे हिन्दी तुलनायां संस्कृतं उर्दू मिश्रित हिन्दी तुलनायां संस्कृतमिश्रित हिन्दी भाषां च राष्ट्रभाषाम् अभिलषन्ति। रामायण महाभारतयोर् गीता योगवाशिष्ठयोः श्रुतिस्मृत्योः च विना भारतं नग्नं, दीनं भविष्यति। एतस्य अक्षय वाङ्मयस्य देवकाव्यस्य वाहनं संस्कृतम् एव।

"अत्रोपवर्ष वर्षौ इह पाणिनि पिङ्गलौ इह व्याडिः। वररुचि पतञ्जली इह परीक्षिताः ख्यातिमुपजग्मुः"। तस्मिन्नेव पाटलिपुत्रे संस्कृतस्य काजीपुरस्थस्य महाविद्यालयस्य उच्चविद्यालयस्य वा दुर्दशां दृष्ट्वा अश्रूणि आयान्ति। वाक्यपदीय, मञ्जूषा व्युत्पत्तिवादादीनां का कथा, सिद्धान्तकौमुद्या अपि अध्यापकाध्येतारो विरलाः। यदि संस्कृत संस्थानमेतत् संस्कृतस्य बीजं पाटलिपुत्रे अपि रक्षितुं प्रभवेत्, तदैवास्य सार्थकता। राजनीतिरोगग्रस्तः संस्कृत विश्वविद्यालयः संस्कृतस्य क्षयं पङ्गुरिव पश्यति। देशे राज्ये च संस्कृतस्य रक्षायै सर्वैः प्रयतनीयं, चिन्तनीयम्।

एतस्याः पत्रिकायाः ग्राहका भूत्वा सर्वेऽपि संस्कृतानुरागिणः बिहारस्य, भारतस्य नागरिका राज्यस्य अस्य राजधान्यां पाटलिपुत्रे संस्कृत संरक्षण प्रयासे सहायिष्यन्ते इति निवेदनम् आशासनं च।

अक्षरयोजकानां प्रमादाद् अज्ञानाद् वा अत्र बहवः अशुद्धयः मुद्रणे संजाताः सन्ति। ताः क्षन्तव्याः सुधार्य च पठनीयाः।

—रामदेव त्रिपाठी

# विषयानुक्रमः

# मोक्षस्योत्पाद्यत्वादिनिषेधपूर्वकन्तस्य नित्यत्वस्थापनम्

डा० श्रीधर त्रिपाठी, एम० ए०, पी०-एच० ड़ी०, डी० लिट्०
व्याकरणवेदान्ताचार्यः, पुराणशास्त्री, डिप्० इन्० एड्०
मिथिला संस्कृत शोध संस्थान दरभंगास्थः

"अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति छान्दोग्योपनिषद्, मुक्तात्मनोऽशरीरत्वं प्रियाप्रियस्पर्शनिषेधञ्च प्रतिपाद्य मोक्षस्य नित्यत्वमेव समर्थयति । जीवात्मनामशरीरत्वस्य स्वाभाविकत्वात् । तदुक्तं श्रुतिभिः—

"अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥[१]"
"अप्राणो ह्यमनाः शुभ्रः"[२]
"असङ्गो ह्ययं पूरुषः"[३]

भगवता शङ्कराचार्येणापि प्रोक्तम्—

"अत एवानुष्ठेयकर्मविलक्षणं मोक्षाख्यमशरीरत्वं नियतमिति सिद्धम् ।"[४]

निरवच्छिन्नानन्दस्वरूपस्य मोक्षस्य सर्वव्यापित्वेन ग्रामादेरिव प्राप्यकर्मत्वं, सर्वविक्रियारहितत्वेन दध्यादेरिव विकार्यकर्मत्वम्, अवयवराहित्येन दर्पणादेरिव संस्कार्यकर्मत्वं, कूटस्थनित्यतया च घटादेरिव निर्वर्त्यकर्मत्वं नैव सम्भवति । "व्रीहीन् प्रोक्षति" इत्यादौ व्रीहीणां प्रोक्षणेन यथा कश्चित्संस्कारो जायेतंऽशाख्यो नैव तथा ब्रह्मणि कश्चिदंशः क्रियाधेयोऽस्ति, येन तस्य स्यात्संस्कार्यत्वं, ब्रह्मणो निरवयवत्वात् । उपासनादिभिर्जायमानस्यात्मतत्त्वसाक्षात्कारस्याविद्यानिवर्तकत्वमेव, न तु ब्रह्मणः स्वरूपोपपादकत्वम्, मोक्षस्याशरीरत्वनिरवच्छिन्नाऽऽनन्दादिस्वरूपस्य नित्यत्वेन तत्स्वरूपोपपादकत्वस्याऽऽत्मसाक्षात्कारादावसम्भवात् । अत आत्मसाक्षात्कारस्य विद्यापरपर्यायस्याविद्याद्वयप्रतिबन्धापनयमात्रेण मोक्षसाधनत्वमुपचर्यते, न तु स्वतोऽपूर्वोत्पादेन । "ब्रह्म वेद ब्रह्मैव भवति"[५], "क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे"[६], "आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन"[७], "अभयं वै जनक प्राप्तोऽसि"[८],

(१) कठोप० १-२-२१ (२) मुण्ड० २-१-२
(३) बृहदा० ४-३-१५ (४) ब्र० सू० शा० भा०
(५) मुण्ड० ३-२-९ (६) मुण्ड० २-२-८
(७) तैत्ति० २-९ (८) बृह० ४-२-४

"तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्सर्वमभवत्"[१] "तत्र को मोहः कः शोक एकत्वमनुपश्यतः"[२] इति श्रुतयो ब्रह्मविद्यानन्तरं मोक्षं दर्शयन्त्यो मध्ये कार्यान्तरञ्च वारयन्त्य आत्मस्वरूपमेव मोक्षं समामनन्ति ।

आत्मनः परिणामिनित्यस्य मोक्षाख्यपरिणामो नितान्तमसङ्गत, आत्मनः कूटस्थत्वावगमात् । यथा कश्चन पुरुषस्तस्करैर्गन्धारेभ्यः पिनद्धाक्षो विवेकरहितो विभ्रान्तो बुभुक्षापिपासादिव्याकुलित-चेताव्याघ्रादिसेवितमरण्यमानीतो दुःखार्तो विक्रोशन् बन्धेभ्यो मुमुक्षुस्तिष्ठति । स च केनचन दयालुना मुनिना मोक्षितः स्वदेशान् गन्धारानवाप्तोऽमन्दानन्दमनुभवन् जायते कृतकृत्यः । एवमेव जीवात्माऽपि तेजोऽबन्नादिमयं पाञ्चभौतिक-शरीरमरण्यं वातपित्ताद्यनर्थसङ्कुलं शीतोष्णादि-द्वन्द्वसमाकीर्णं मोहपटाभिनद्धाक्षः पुण्यापुण्यादि-तस्करैः प्रवेशितो ममैते बान्धवाः, अहं दुःखी, अहं पापी, मे धनं नष्टं, हा हतोऽस्मि, कथं जीविष्यामीत्यादि विलपन् भार्यादि-तृष्णापाशग्रस्तः परमकारुणिकेन ब्रह्मात्मविदा विमुक्तबन्धनः क्रियते ।[३] ब्रह्मज्ञानिन आचार्यवतो जीवात्मनोऽविद्यानिवृत्तौ सदात्मस्वरूपमोक्षप्राप्तौ तावानेव कालो जायते विलम्बो, यावत्कालं शरीरारम्भकं प्रारब्धं कर्म वर्तते तस्यावशिष्टम् । विनष्टे प्रारब्धे तस्य मुक्तस्वरूपं स्वत एव प्रकाशते । अत एव ब्रह्मज्ञानिनो जीवनादिप्रयोजनाभावेऽपि प्रारब्धकर्मफलभोगं भुञ्जत एव । "तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा"[४] "यो वै भूमा तत्सुखम् ।"[५] "एष एव परमानन्दः"।[६] "विज्ञानमानन्दं ब्रह्म ।"[७] इत्यादि श्रुतयो आत्मन आनन्दस्वरूपमेव समामनन्ति । आनन्दस्वरूपमोक्ष एव मुमुक्षुभिः पुरुषैरर्थ्यते । अतो न मोक्षसुखस्योत्पाद्यत्वादिकम् । ततश्च मुमुक्षूणां मोक्षे प्रवृत्तिर्मोक्षसुखाभिव्यक्तये, न तु मोक्षसुखोत्पादनायापीति ।

चतुर्षु पुरुषार्थेषु मोक्षस्यैव नित्यत्वमाचार्यैः समर्थितम् । तदुक्तञ्च श्रुतौ "न स पुनरावर्तते"[८] इति । यद्यपीयं श्रुतिरर्चिरादिना ब्रह्मलोकं गतस्य पुनरावृत्तिं प्रतिषेधति, न तु मुक्तस्य, तथापि "ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे परस्यान्ते कृतात्मानः प्रविशन्ति परं पदमित्यादिवचनात्"[९] तस्य भाविनं ब्रह्मभावमपि बोधयति । ततश्च सिद्धं मोक्षस्य नित्यत्वम् ।

धर्मस्य च "तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयत"[१०] इति छान्दोग्यश्रुत्याऽनित्यत्वं स्पष्टमेव । अर्थकामयोरपि प्रत्यक्षत एवानित्यत्यमध्यवसीयते । यत्तु दृष्टान्त-श्रुत्याऽर्थकामयोरपि सिद्धमेवानित्यत्वमिति प्रललाप तन्मन्दम् । पूर्वमसिद्धस्य

(१) बृह० १-४-१०
(२) ईशा० ७
(३) पण्डितो मेधावी गन्धारानेवोपसम्पद्येतैवमेवेहाचार्यवान् पुरुषो वेद । छान्दो० ६-१४-२
(४) बृह० १-४-८
(५) छान्दो० ७-२३-१
(६) बृहदा० ४-३-३३
(७) बृहदा० ३-९-२८
(८) बृह० ४-२-३
(९) वेदान्त परिभाषा प्रकाशिका पृ० १०
(१०) छान्दो० ८-१५-१

वस्तुनो दृष्टान्तानर्हत्वात् । न हि गव्यदृष्टायामसिद्धायाम्वा गो-सदृशो गवय इत्युपमानं कदाऽपि सम्भवति । तस्माल्लोक सिद्धमेवानित्यत्वमर्थकामयोरभ्युपेयम् । अत एव दृष्टान्ते "इह" पदप्रयोगोऽपि स्वरसत उपपद्यते । न चेह पदस्य स्वर्गादिपरत्वं युक्तम्, तथा सति दार्ष्टान्तिकवाक्यघटकामुत्रपदवैयर्थ्यापत्तेः । न चाप्येतदनुकूलमिति शक्यं वक्तुम्, तत्रेहपद-प्रतिद्वन्द्वित्वस्यैव सर्वानुभवगोचरत्वात् ।

एतेन धर्मपदेनैहिकसुखमामुष्मिकसुखञ्चोभयं विवक्षितम्, तत्रैहिकधर्मसाध्यसुखापायस्य प्रत्यक्षसिद्धत्वे सत्यपि श्रुतिमन्तराऽऽमुष्मिकसुखापायस्यासिद्धेरिति तदनित्यत्वप्रदर्शनायैव तद्यथेहेत्यादि छान्दोग्य श्रुतिरिति व्याख्यानमाशुबोधिनीकृतामनादरणीयमेव, तत्र धर्मपद-स्याऽऽमुष्मिकसुखमात्रपरत्वेऽप्युपपत्तौ तथाऽर्थकल्पनस्य गौरवपराहतत्वात् । अत एव शिखा-मणिकारादिभिरपि तथैव तत्स्थलीयः परिभाषाग्रन्थो व्याख्यातः ।

किञ्च प्रत्यक्षसिद्धकार्यत्वेन लिङ्गेनापि धर्मार्थकामानामनित्यत्वं सिद्ध्यति तथाहि—धर्मार्थकामा अनित्याः, कार्यत्वात्, घटवत्, यन्नैवं तन्नैवं यथा ब्रह्मेत्यनुमान-प्रयोगः । धर्मस्यानित्यत्वविषये मनुरप्याह—

चतुष्पात् सकलो धर्मः सत्यञ्चैव कृते युगे ।<br>इतरेष्वागमाद्धर्मः पादशस्त्ववरोहितः ॥[1]

इत्यादिना । तत्रागमादित्यनेन धर्मस्यानित्यत्वे श्रुतिरपि मानमिति सूचितम् । नचैवमपि "धर्मो नित्यः सुखदुःखे त्वनित्ये" "अक्षय्यं ह वै चातुर्मास्य-याजिनः सुकृतम्भवती-त्यादिवचनविरोधः शङ्क्यः ? उभयोर्नित्यत्वाऽनित्यत्वबोधकवाक्ययोः परस्परं विरोधे प्रामाण्यं स्वार्थे भाति युक्तन्धर्मानित्यत्व- बोधकस्यैव । तन्नित्यत्वबोधके नित्यपदस्या-प्रलयस्थायित्वपरतयापि निर्वाहात् । तदुक्तम्—

"आभूतसम्प्लवं स्थानममृतत्वं हि भाष्यते ।"

न च विनिगमनावैकल्येन तन्नित्यत्वबोधकश्रुतेरेवाप्रामाण्यं स्वार्थे युक्तं वक्तुं कथमपि, तथा सति तदनित्यत्वबोधक श्रुतेर्नैरर्थक्यन्दुर्वारमेव स्यात् । तस्मात्सिद्धं मोक्षस्य नित्यत्वम् ।

(१) मनु संहिता १-८१-८२

# राष्ट्रयैकतायाम् संस्कृतम्

श्री चन्द्रदीप शुक्लः (सम्पादकः, संस्कृत सम्मेलनम्)
चौक पटना सिटी

संस्कृतसाहित्ये वेदानां सर्वोच्चस्थानं विवादरहितं सर्वविदितमिति न तिरोहितं प्रेक्षावतां विदुषाम्। वेदाध्ययने एतादृशं पन्थानम् अन्वीक्ष्य वर्ष-सहस्रेणापि सम्पूर्ण-वेदाध्ययनं न सुकरम् इति विचिन्त्य परमकारुणिको भगवान वेदव्यासः विनियोगानुकूलतया ऋक्-यजु सामाथर्वत्वेन चतुर्धा वेदं विभक्तवान्! प्रथमे हि वेदा अपौरूषेयाः। वेदः शब्द-प्रधानः। प्रभुः वाङ्मात्रेण प्रवर्त्तको निवर्तकश्च भवति। अतः प्रभुसम्मितो राज-तुल्यो वेद इति। ततः न केवलम् आज्ञारूपत्वं वेदमातुः, परं मातृवत् परमकारूणिकत्वमपि विलसतीति निश्चप्रचम्।

(क) सुर-भारती-रचिते वैदिक-साहित्ये लौकिक-साहित्ये च राष्ट्रियोत्थानक्रमे विचार-साम्य परस्परं सौमनस्यं, मित्र-भावश्चादिष्टं भवति। वेदमन्त्रे काव्यादिग्रन्थे च राष्ट्रहिताय बहुधा मन्त्रादयः सूक्तयश्च राष्ट्रियैकतायाः प्रतीकाः वर्त्तन्ते। परन्तु यस्मिन् देशे वेदानामेव दुरवस्था, तत्र का कथा अन्येषाम्। अतएव वेदानां विधिपूर्वकं स्वाध्यायेन रक्षा विधेया। सम्प्रति यदि देशे वेदानां पठनं-पाठनं न स्यात् तदा शान्ति-सुव्यवस्था कदापि नैव सम्भाव्यते। तस्मात् राष्ट्रियैकता-मार्गे विधिपूर्वकं वेदाध्ययनं परमावश्यकम्।

विश्वस्य प्राचीनतमे ग्रन्थे ऋग्वेदे सर्वप्रथमम् अनेके मन्त्राः एतादृशाः सन्ति, येभ्यों राष्ट्रियैकतायाः सम्यक् परिचयः प्राप्यते। अनेकेषु स्थलेषु सामाजिकं जीवनं निर्वाहयितुम् उत्प्रेरकाः सूपदेशाः प्रदत्ताः विराजन्ते। निम्नलिखिते मन्त्रे राष्ट्रियैकतायाः समुद्घोषः प्रतीयते।

यथाहिः—

"संगच्छध्वं संवदध्वं सं वो मनांसि जानताम्
देवा भागं यथा पूर्वे सञ्जानाना उपासते।
समानी व आकूतिः समाना हृदयानि वः
समानमस्तु वो मनो यथा वः सुसहासति।"

(ऋग्वेद १० मण्डल)

अपि चान्यत्र सर्वप्राणिनां कृते मैत्र्यभावस्याभिकामना द्योतते। यथा हिः— "मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम्" इति। मन्त्रेस्मिन् राष्ट्रियत्वस्यैक्यस्य च भावना परिस्फुरति।

राष्ट्रहिताय वेदमन्त्रमाध्यमेन अस्माकं ऋषिभिः बहुधा मन्त्राः प्रोक्ता यथा—

"ओऽम् आ ब्रह्मन्! ब्राह्मणो ब्रह्मवर्चसी जायताम् आ राष्ट्रे राजन्यः शूर इषव्योऽति व्याधी महारथो जायताम, दोग्ध्री धेनू र्वोढानड्वान् आशः सप्तिः पुरन्धि र्योषा जिष्णू

रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायताम्, निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्ताम्, योगक्षेमो नः कल्पताम्" (यजुर्वेद अ० २२।।२२)

अर्थात् हे ब्रह्मन् अस्माकं राष्ट्रे ब्राह्मणाः नृपाः सदाचारिणः वीराश्च भवेयुः। गावः दुग्ध-दात्र्यः, वृषभाः पुष्टाः, अश्वाः शीघ्रगामिनः, नार्य आचारवत्यः, रथिनः विजयशीला, युवानश्च सभायाः समाजस्य च कर्मसु कुशलाः भवेयु, यज्ञकर्त्तुः पुत्राः वीराः भवेयुः, पर्जन्यः पर्याप्तं वर्षतु, औषधयः सकलशक्तिमत्यो भवेयुः, सर्वेषां योगक्षेमो भवेत्।" अस्माकं पूर्वाचार्याणाम् इयम् अभिवाञ्छा आसीत्, यदस्माकं राष्ट्रं धनधान्यादि-सम्पन्नतां प्राप्य सततं जगति अभिवर्धताम्।

अथर्ववेदे भारतभूमेः मातृरूपा भावना विश्रुता वर्त्तते। पूर्वाचार्याः ऋषयः भारत भूमिं श्रद्धया प्रणमन्ति च। यथाः—

"भूमे मातर्निधेहि मा भद्रया प्रतिष्ठितम्"।
तस्यै हिरण्य-वक्षसे पृथिव्या अकरं नमः।।

माता भूमिः, पुत्रोऽहं पृथिव्याः, पर्जन्यः पिता स उ नः पिपर्तु। अर्थात् पृथिवी मे माता, अहं पृथिव्याः पुत्रः, पर्जन्योऽस्माकं पिता, सोऽस्मान् अन्नादिभिः परिपूर्णान् करोतु। वस्तुतः राष्ट्रिय-भावनायाम् अकल्पनीया कल्पना स्तुत्या अस्ति।

भारतीय-राष्ट्रियतायाः विरोधिनां विनाशाय आर्याः सर्वतोभावेन समुत्सुकाः दृश्यन्ते। ते पूर्वाचार्याः वदन्ति, हे मातः! ये अस्मान् द्विषन्ति, ये आक्रामन्ति ये चास्माकमशुभं चिन्तयन्ति तेषां दुष्टानां जनानां त्वं विनाशं कुरू। यथाहि—

यो नो द्वेषत् पृथिवि यः पृतन्यात्। योऽभि दासान् मनसा यो वधेन तं नो भूमे रन्धय पूर्वकृत्वरि।

राज्यशासनेऽपि वेदमन्त्राः राजानम् उपदिशन्ति राष्ट्रोन्नयनार्थम् यथाहि—

ऋग्वेदस्य षष्ठमण्डले सू० ३०।। मं० ।।३।।

"अद्या चिन्नू चित्तदपो नवीनां यदाभ्यो अरदो गातुमिन्द्रः। नि पर्वता अद्मसदो न सेदुस्त्वया दृढानि सुक्रतो रजांसि

× × ×

यस्य गावावरुषा सूयवस्यू अन्तरूषुचरणे रेरिहाणा।
स सृञ्जयाय तुर्वशं परादाद् वृचीवतो दैववाताय शिक्षन्।

मन्त्रेऽस्मिन् राष्ट्रसंवर्धनार्थं नृपाणां बलस्यौजसश्च प्राधान्यं स्वीक्रियते।

अथर्ववेदस्य बहुशः मन्त्रा देशभक्तेर्भावनया युक्ताः सन्ति। पृथिवी सूक्तम् आर्याणाम् राष्ट्रियगानं कथयितुं युज्यते। तत् मातृभूमेरभिवन्दनायां राष्ट्रवन्दना प्रतीयते।

"ध्रुवं ते राजा वरूणो ध्रुवं देवो बृहस्पतिः
ध्रुवं त इन्द्रश्चाग्निश्च राष्ट्रं धारयतात् ध्रुवम्"

मन्त्रेऽस्मिन् राष्ट्रस्य स्थिरतायै रक्षायै अभिवृद्धये वरुणस्य, वृहस्पतेः वुद्धेः, इन्द्रस्य क्षात्रबलस्य, अग्नेश्च सहयोगः प्रार्थितः। तत्र यज्ञादि कर्मानुष्ठानस्य च साहाय्यम् अपेक्षितम्।

× × ×

पूर्वमेव प्रतिपादितं यत् सुरभारती-समुदिते विविधे प्राचीन आर्षकाव्ये राष्ट्रियैकतायाः एकत्वपरकः विचारः सम्पादितः। विश्वस्यादिमेषु वैदिक ग्रन्थेषु, उपनिषद् ग्रन्थेष्वपि राष्ट्रिय भावनायाः प्रादुर्भावः प्रतीयते। यथाहिः—

"ॐ सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु, मा विद्विषावहै" इत्यत्र राष्ट्रिय विचारस्य सन्देशः उपनिषदां सर्वस्मिन् काले सर्वत्र स्वीकार्यः ग्राह्यश्चेति। जीवने सकलं कार्यं सम्पादयितुं सहजीवनम्, सह भोजनम्, सहशिक्षणम्, अभिवाञ्छितम्। अयमेव सन्देशः राष्ट्रिय जीवनस्य प्रवर्धनार्थं समुद्घोषः। अनेन सन्देशेन राष्ट्रियैकता प्रतिस्फुरिता भविष्यति। उपनिषदां सार्वभौमः, सर्वयुगीनः, नयः, राष्ट्र-समृद्धये प्रेरणाप्रदः। अयं सन्देश एव विश्वस्मिन् ऐक्यजीवनम् आह्वयति। विश्व-वन्धुत्वसन्देशोऽयं जगति राष्ट्रियैकतायाः प्रतीकः।

× × ×

(ख) आदिकाव्ये महाभारतादौ वेदतुल्ये

आदिकविः वाल्मीकिः विश्वस्य हि हितचिन्तक आसीत्। कवेः मनसि करूणा सदा वरीवर्ति। एषां कवीनां महावाक्यमिदमस्ति—

"मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत्क्रौञ्च-मिथुनादेक मवधीः काममोहितम्॥"

करूणाजनकं काव्यमूलमिदं विश्ववन्धुत्वं दर्शयति। आदिकविनैव सर्वप्रथमम् कथितं यत्—

"जननी जन्मभूमिश्च स्वर्गादपि गरीयसी"

आदिकवेरुक्तिः मातृभूमिं प्रति श्रद्धाया व्यञ्जकमस्ति। राष्ट्रिय आदिकाव्ये रामायणे वर्णिता कथा सम्पूर्णं भारतं राष्ट्रियैकतायाः एकसूत्रे गुम्फयित्वा सांस्कृतिकीं भौगोलिकीञ्चैकतां स्थापितवती। अतएवेदं राष्ट्रियकाव्यत्वेन विश्वविश्रुतम्। अस्मिन् आदिकाव्ये जनजीवनस्यानुसारणार्थं ये विश्वकल्याणार्थ विविधाः राष्ट्रियोचिता उदात्तगुणाः वर्णिताः सन्ति ते रामराज्यस्यादर्श भूताः राष्ट्रियभावनायाः प्रतीकाः परिचायकाः स्थिताः। स्वतन्त्रेऽस्मिन् भारते देशे रामराज्यस्य वैशिष्ट्यं प्रसिद्धम्। रामराज्यस्य राजतन्त्रे प्रजातन्त्रं पल्लवितम् इति लोकैः दृश्यते, श्रूयते, समर्थ्यते च।

वेदव्यासविरचितं महाभारतमपि वस्तुतः राष्ट्रियमहाकाव्यम्। अयं ग्रन्थः पञ्चमः वेद इव जनैः मन्यते। अस्य वैशिष्ट्यं व्यासस्य निम्न गर्वोक्त्या ध्वन्यते। यथाहि—

"धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्॥

एवं भारतीय गौरव युक्ते महाभारते महाकाव्ये राष्ट्रिय भावनायाः सर्वतो भावेनाभिव्यक्तिः दृश्यते। ग्रन्थेऽस्मिन् भीष्मपितामहेन राजनीतिः धर्मनीतिः व्यवहारनीतिश्च प्रतिपादिताः, अथ च राजधर्मस्य महत्ता प्रकटिता।

अस्माकं राष्ट्रिय चरितस्य निर्माणे रामायण महाभारतयोः योगदानम् अतीव महत्त्वपूर्णमस्ति। ग्रन्थस्यास्य परिशीलनेन समस्तं भारतवर्षं राष्ट्रियैकतायामावद्धं प्रतिभाति। उपनिषद् ग्रन्थ इव महाभारतस्यैको महत्त्वपूर्णो भागः श्रीमद्भगवद्गीतानाम्ना विश्वविश्रुतः। गीतायाः कर्मयोगः तथा च तत्र सदुक्तयः जगतः प्रेरणाप्रदायिका अपि च भारतीय राष्ट्रस्य धर्मनिरपेक्षनीतेः अनुकूलाश्च। अत एवास्य राष्ट्रिय ग्रन्थस्य गीताशास्त्रस्य प्रतिष्ठा विश्वस्मिन् सर्वतोमान्या श्लाघनीया च तिष्ठति।

(ग) संस्कृतस्य पुराणसाहित्येऽपि राष्ट्रियैकतायाः सर्वत्र प्रतिपादनं प्राप्यते। मत्स्यपुराणानुसारं कन्याकुमारीतः हिमालयं यावत् देशस्यास्याखण्डत्वं वर्णितम्। भारतवर्षस्य सीमानिर्धारणे विष्णुपुराणस्यायं श्लोकः अतीव महत्त्वपूर्णः अस्ति। चीन-भारतयोः सीमाविवादे अयं श्लोकः भूतपूर्व प्रधानमन्त्रिणा स्व० पं० जवाहरलाल नेहरू महोदयेन प्रत्युपस्थापितः यथा—

"उत्तरंयत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम्।
वर्षं तद् भारतं नाम भारती यत्र सन्ततिः॥"

एतेन भारतवर्षस्याखण्डत्वं सम्यक् प्रतिपादितम्। पुराण ग्रन्थेषु राष्ट्रियैकतायाः स्वरूपं विशदं वर्णितमस्ति। एवंभूतेषु पुराणग्रन्थेषु भारतभूमिः कर्मभूमिः मन्यते। तथा स्वर्गात् अपवर्गात् अपि अस्याः भूमेः श्रेष्ठता उद्बोध्यते। कर्मभूमिरियम् भारतभूमिः देवानामपि महद् आकर्षणस्थलम्। भारते जन्म-ग्रहणं देवानामपि स्पर्धायाः विषयः। विद्यावतां भागवते परीक्षा, तत्रापि सर्वत्र समग्र-राष्ट्रियतायाः पृष्ठभूमिः दरीदृश्यते। अस्माकं राष्ट्रिय भावनायाः स्पष्ट उद्घोष एवमस्ति।

"सर्वे भवन्तु सुखिनः, सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु, मा कश्चिद् दुःखभाग् भवेत्।"

भारतीय राष्ट्रियैकतायाः महती विशेषता अस्ति। समस्त मानवानां कृते मङ्गलकामना नान्यत्र कुत्रापि दृष्टिपथमायाति।

स्मृति-ग्रन्थेष्वपि राष्ट्रियैकतायाः मातृभूमेः अखण्डतायाश्च प्रतिध्वनिः श्रूयते। आर्यावर्तस्य सीमानिर्धारणं कुर्वता श्रीमनुना मातृभूमेः अखण्डता प्रतिपादिता। वस्तुतः राष्ट्रियैकतायाः मूर्त्तरूपं तदुक्तौ प्रतिस्फुरति। यथाहि—

"आ समुद्रात् तु वै पूर्वादासमुद्रात्तु पश्चिमात्।
तयोरेवान्तरं गिर्योरार्यावर्त्तं विदुर्बुधाः॥" मनु १२।२२॥
"तं देव निर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते" मनु २।१७॥

कथनेनानेन राष्ट्रियैकतायाः भौगोलिकं वर्णनं समीचीनं प्रतीयते।

गुप्त साम्राज्य कालेऽपि आचार्य चाणक्यस्य अर्थशास्त्रे राष्ट्रियत्वस्य महद्गौरवं स्वरूपम् अवलोक्यते। तेनोक्तं यद् भारतीयाः कस्यामपि दशायाम् पारतन्त्र्यं न सहन्ते। आर्याः कदापि दासतां न स्वीकुर्वन्ति।

अस्माकं संस्कृतसाहित्यं समस्त मानवतायाः बौद्धिक राजनीतिक सांस्कृतिकाध्यात्मिक-सामाजिकार्थिकादि सम्बन्धेषु ऐक्यानुभूति-चेनाम् उद्बोधयति। एतादृशी चेतनैव राष्ट्रियतायाः वास्तविकं स्वरूपम्। सर्वहितैषिणी भावनाऽस्माकं राष्ट्रियताया महती विशेषता।

संस्कृत साहित्यस्य काव्यग्रन्थेष्वपि राष्ट्रियताया विशिष्ट भावना वरीवर्ति। महाकवि कालिदास भासप्रभृतीनां काव्ये नाटके चापि एतादृशी भावना जागर्ति। स्वप्न वासवदत्तायां यथा भासः कथयति:—

"इमां सागरपर्यन्तां हिमवद् विन्ध्यकुण्डलाम्।
महीमेकातपत्राङ्कां राजसिंहः प्रशास्तु नः॥"

अत्र समस्ते भारते एकच्छत्रशासनस्य कामना राष्ट्रियैकतामभिव्यनक्ति। अभिज्ञानशाकुन्तले नाटके कालिदासेनोक्तम्—

"प्रवर्त्ततां प्रकृतिहिताय पार्थिवः
सरस्वती श्रुतिमहती महीयताम्॥"

अत्र प्रजानां हिते सततप्रवृत्तिः विदुषां समादरश्च राष्ट्रस्योत्थानाय परमावश्यकं इति प्रतिपादितम्।

"सर्वस्तरतु दुर्गाणि, सर्वो भद्राणि पश्यतु
सर्वः कामानवाप्नोतु सर्वः सर्वत्र नन्दतु"

इत्यत्रापि समस्तमानवतायाः मङ्गलकामना निहितास्ति। अपि च राष्ट्रस्य समुन्नतये अर्थवैभवस्य बुद्धिवैभवस्य च परस्पर-समन्वयोऽपेक्षितः: अर्थात् शासनं बुद्धि नियन्त्रितमेव राष्ट्रकल्याणाय प्रतिपद्यते। एतेनेदं सुस्पष्टं प्रतिभाति यत् महाकवि कालिदासः समग्र राष्ट्रियतायाः हित चिन्तक आसीत्। संस्कृत साहित्ये काव्य नाटकेष्वपि भारतीय राष्ट्रियतायाः जागरणस्य सन्देशः प्राप्यते। एवं कुमारसम्भवे मेघदूते, रघुवंशादि महाकाव्येऽपि राष्ट्रियतायाः प्राकृतरूपेण भारतभूमेर्मनोहारिणी शोभा वर्णिता। रघोः राज्ञः दिग्विजय वर्णने महाकविना विजय व्याजेन बृहत्तर भारतस्याखण्डसीमा निर्दिष्टा। राष्ट्रव्यापिन्या अखण्डैकतायाः कमनीया कल्पना प्रकटिता। निबन्ध दैर्घ्य कारणात् संक्षेपेणेह प्रस्तूयते।

संकेततः समस्त संस्कृत साहित्ये राष्ट्रिय भावनायाः देशभक्तेः भावनायाश्च सर्वत्र अभिव्यक्तिः दृश्यते। संस्कृत साहित्यं संकीर्णां राष्ट्रियतां विहाय अन्ताराष्ट्रियताया उदात्त भावनामादाय समस्तमानवताया मङ्गलकामनां करोति इति नाविदितं प्रेक्षावतां विदुषाम्।

भारते स्वदेश प्रेम्णः स्वदेशाभिमानस्य सामुदायिक राष्ट्रियतायाश्च भावाभिव्यञ्जना संस्कृत साहित्ये निरन्तर-प्रवहण-शीलास्ति। प्राचीन संस्कृत साहित्येऽपि स्वतन्त्र भारतस्याभिव्यक्तिरस्ति। यत्रास्माकं देशस्य राष्ट्रिय भावना सुरक्षिता विद्यते। एतादृशी राष्ट्रियैकतायाः भावना नान्यत्र साहित्ये दृष्टिपथमायाति। विश्वस्य प्राचीनतमे ग्रन्थे ऋग्वेदे सर्वप्रथमं राष्ट्रस्य राष्ट्रशक्तेश्च वर्णनं द्रष्टव्यम्। संस्कृत साहित्ये प्रस्तुतेयं राष्ट्रियैकताया विश्वविश्रुता भावना वस्तुतोनुकरणीया श्लाघ्या चास्ति।

अतो राष्ट्रियैकतायां संस्कृतस्य महत्वं सुरक्षितम् इत्यत्र न कश्चिद् विवादावसर इति।

□

# बौद्ध तथा न्याय दर्शन में बन्ध और मोक्ष का स्वरूप एवं उसके उपाय

डॉ० किशोरनाथ झा

न्याय दर्शन के दूसरे सूत्र में बन्ध और मोक्ष के उपाय कहे गये हैं—"दुःख जन्म प्रवृत्तिदोष मिथ्या ज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" १-१-२

मिथ्याज्ञान दोष का जनक है, दोष से प्रवृत्ति होती है, प्रवृत्ति जन्म का हेतु है और संसार में आने पर दुःख अवश्यंभावी है। इस तरह मिथ्याज्ञान ही बन्धन का मूल है।

तत्वज्ञान के द्वारा मिथ्याज्ञान के नाश से दोष का अभाव, दोष के अभाव से प्रवृत्ति का अभाव और प्रवृत्ति के नहीं रहने से जन्म का अभाव पश्चात् जन्म के अभाव से दुःखाभाव रूप मोक्ष की प्राप्ति होती है।

कार्यकारणभाववादी नैयायिक ने कारण के अभाव में कार्य का अभाव और अन्य कारण की उपस्थिति में कार्य की सत्ता को लेकर उक्त सूत्र द्वारा बन्ध और मोक्ष के उपाय तथा स्वरूप का निर्देश किया है।

यहाँ विचारणीय है कुछ पारिभाषिक पद, यथा मिथ्याज्ञान, दोष तथा प्रवृत्ति।

प्रायः सभी दार्शनिकों ने एकमत होकर सांसारिक बन्धन के मूलरूप में अहंकार को माना है। इसी का नाम है मिथ्याज्ञान या संकल्प, सम्यक् कल्पनात्मक मोह या शोभन अध्यास या भ्रमविशेष जो राग, द्वेष तथा मोहरूप दोष का कारण है।

अभिप्राय यह है कि इस संकल्प या अहंकार या मिथ्याज्ञान का कारण है पूर्वानुभूत विषयों का अनुस्मरण। अनुकूलविषयक अनुस्मरण होने पर उसमें राग होता है और प्रतिकूलविषयक अनुस्मरण द्वारा द्वेष का उदय होना स्वाभाविक है।

प्रत्येक जीव जन्म के बाद किसी न किसी विषय में राग या द्वेष से युक्त देखा जाता है। तद्विषयक संकल्प के बिना इन राग द्वेषों का उदय नहीं होता है। और पूर्वानुभूत विषयों की अनुस्मृति के बिना यह संकल्प नहीं हो सकता है। अतएव मानना होगा कि प्रत्येक जीव ने पूर्वजन्म में, अनुस्मृत विषयों के समानजातीय विषयों का उसी रूप में अनुभव किया होगा जिस रूप में उस विषय का संस्कार द्वारा अनुस्मरण हो रहा है। इस तरह जन्मजन्मान्तर की सिद्धि होती है, जिससे अनादि जन्मप्रवाह एवं अनादि संस्कारप्रवाह मानना होगा। और संस्कारप्रवाह की अनादिता अपने आश्रय आत्मा की अनादिता भी सिद्ध करती है। फलतः शरीर आदि के साथ आत्मा के विलक्षण संबन्धरूप

जन्म की प्रवाहानादिता सिद्ध होती है। इसी को 'भवचक्र' कहते हैं। यही हैं 'बन्धव्यवस्था'।

"नान्तो न चादिर्न च संप्रतिष्ठा" ।५।३। भगवद्गीता का यह वचन इसी अभिप्राय का बोधक है।

इस तरह मिथ्याज्ञान के वाद दोष का परिचय आवश्यक है। शुभाशुभकर्मरूप-प्रवृत्ति के निमित्त दोष कहे गये हैं। राग, द्वेष तथा मोह के अधीन जीव शुभ एवं अशुभ कर्म में प्रवृत्त होता है। अतएव प्रवर्तना अर्थात् प्रवृत्ति के जनक राग, द्वेष तथा मोह दोष पद से अभिहित होते हैं। प्रवर्तनालक्षणा दोषाः (१।१।१८।) इस न्यायसूत्र का यही अभिप्राय है। यद्यपि अहंकार संकल्प या मिथ्याज्ञान मोहस्वरूप ही है। पुनः मोह से मोह की उत्पत्ति की बात जँचती नही है, तथापि सामान्य विशेष भाव को लेकर इसका समाधान किया जा सकता है। संमोह अर्थात् उत्कृष्ट कोटिक मोह साधारण मोह, अर्थात् राग और द्वेष का जनक होता है। रञ्जनीय मोह राग का कारण होता है और कोपनीय मोह द्वेष का। "तेषां मोहः पापीयान् नामूढस्येतरेतरोत्पत्तेः" (४।१।६।) इस न्याय सूत्र से ऐसा ज्ञात होता है। तेषाम् रागद्वेषमोहानां मोहः पापीयान् अति पापयुक्तः, यतो हि मोहरहितस्येतरेतरयोः रागद्वेषयोरुत्पत्तिर्न भवति। प्रवृत्ति पद के दो अर्थ होते हैं—शुभाशुभ कर्म तथा इस कर्म का फल धर्म और अधर्म, पुण्य और पाप। कारणात्मक प्रवृत्ति के तीन प्रकार हैं शारीरिक, वाचनिक तथा मानसिक। दान देना, रक्षा करना तथा सेवा शारीरिक शुभ कहे गये हैं। सत्य, हित तथा प्रिय वचन और स्वाध्याय-इस तरह चार वाचनिक शुभ कर्म है। मानसिक शुभ कर्म दया, श्रद्धा तथा अस्पृहा माने गये है। इस तरह शुभ कर्म के दस भेद हैं जो धर्म के (पुण्य के) जनक हैं। इसी तरह दस अशुभ कर्म पाप के जनकरूप में प्रसिद्ध हैं—हिंसा, चौर्य तथा प्रतिषिद्ध मैथुन ये तीन शारीरिक अशुभ कर्म हैं। मिथ्या, कठोर, असंबद्ध भाषण और पैशुन्य चतुर्विध वाचिक अशुभ कर्म हैं। और परद्रोह, पर-द्रव्य-लिप्सा तथा नास्तिकता मानसिक अशुभ कर्म हैं।

इसी शुभाशुभ कर्म का फल धर्माधर्म रूप अदृष्ट जीव के शरीर आदि के साथ विलक्षण संबन्धरूप जन्म का कारण होता है। "पूर्वकृत फलानुबन्धात्तदुत्पत्तिः" (४।२।४१) इस न्याय सूत्र का यही तात्पर्य है। पूर्वकृत कर्म के फल के अनुबन्ध से जीव का जन्म होता है। कोई भी व्यक्ति किसी समय अपनी इच्छा से जन्मलाभ नहीं कर सकता है। अपितु प्राक्तन कर्म के फलानुसार जन्मलाभ होता है। फलतः प्रत्येक जीव अनादि काल से अपने कर्मों के फलस्वरूप मानव जन्म पाकर शुभाशुभ कर्म करता आ रहा है। अतएव अनादि आत्मा की जैसे उत्पत्ति नहीं होती, उसी तरह विनाश का कारण नहीं रहने से उसका विनाश भी नहीं होता है।

न्यायभाष्यकार ने उक्त दूसरे सूत्र की व्याख्या में इन उपर्युक्त अभिप्रायों को संक्षेप में इस तरह कहा है—"त इमे मिथ्याज्ञानादयः दुःखान्ता धर्मा अविच्छेदेनैव प्रवर्तमानाः

संसार इति"। यहाँ एक बात ध्यान देने योग्य है कि संसार की अनादिता सिद्ध होने पर भी जिज्ञासा होती है कि मिथ्याज्ञान, संकल्प या अहंकार का हेतु क्या है, जो संसार की अविच्छिन्न धारा का प्रवर्तक है ? इसके उत्तर में न्यायवार्तिककार उद्‌दयोतकार का कहना है कि—दुःख ही इस मिथ्याज्ञान का जनक है। पहले दुःख हुआ या पहले मिथ्याज्ञान, इसका अवधारण नहीं हो सका है। बीज तथा अंकुर की तरह दुःख और मिथ्याज्ञान का संबन्ध अनादि है और अनादि अनवस्था दोषाधायक नहीं होती है।

"कः पुनरयं संसारः। दुःखादीनां कार्यकारणभावः। स चानादिः। पूर्वापरकालानियमात्। न च शक्यं वक्तुं पूर्वं दुःखादयः, पश्चात् मिथ्याज्ञानोत्पत्तिः पूर्वं वा मिथ्याज्ञानं पश्चाद् दुःखादय" इति।

इस मिथ्याज्ञान के नाश में तत्त्वज्ञान का सहायक विषय होता है। विषय अपने स्वरूप से यथार्थ रूप में ज्ञात होकर पुनः मिथ्यारूप में भासित नहीं हो सकता है। क्योंकि प्रमाणान्तर उसका बाधक होता है और यथार्थ ज्ञान का परिपोषक होता है। और मिथ्याज्ञान असहाय होने से नष्ट हो जाता है। पुनः रागादि दोषोंका नाश होता है। पुनः प्रवृत्ति नहीं होती है। और प्रवृत्ति के अभाव में जन्म नहीं होता है। अब जन्माभाव से दुःखाभाव का उत्पन्न होना स्वाभाविक है। यही दुःख का अत्यन्ताभाव मोक्ष है, जो तत्त्वज्ञान के द्वारा प्राप्त होता है।

× × × × × ×

बौद्धाचार्यगण प्रतीत्यसमुत्पादवाद की चर्चा करते हैं। अपनी प्रतीति कराकर अपने सजातीय कार्य का उत्पादन इसका शाब्दिक अर्थ होता है। इसके रहने पर यह होता है और इसकी उत्पत्ति के बाद यह उत्पन्न होता है। यही इसका स्वरूप है। इसके बारह अंग तथा तीन काण्ड माने गये हैं। प्रतीत्य समुत्पाद के ये अंग माने गये हैं। अविद्या, संस्कार, विज्ञान, नामरूप, षडायतन, स्पर्श, वेदना, तृष्णा, उपादान, भव, जाति तथा जरामरणा-काण्ड शब्द जन्म का वाचक है। अतएव इसके पूर्वजन्म, परिगृहीत जन्म तथा अनागत जन्म रूप तीन काण्ड होते हैं। अविद्या तथा संस्कार पूर्वजन्म के होते हैं। दो अंग जाति तथा जरामरण के अनागत जन्म के दो माने गये है। शेष मध्यपतित आठ अंग विज्ञान, नामरूप, षडायतन, स्पर्श, वेदना, तृष्णा, उपादान तथा भव गृहीतजन्म में पाये जाते हैं। गर्भस्थ शिशु के मरने पर या असमय निधन होने पर इन आठ अंगों का समुचित उपयोग नहीं हो पाता है। अतएव परिपूर्ण आयुशाली व्यक्ति के लिए इन आठ अंगों का उपयोग होता है। अभिधर्मकोष में कहा गया है—

यः प्रतीत्यसमुत्पादो द्वादशाङ्गस्त्रिकाण्डकः।
पूर्वापरान्तयोर्द्वे द्वे मध्येऽष्टौ परिपूरिणः ११-३-२०

यहाँ परिपूरिन् पद पूर्णायु के लिए कहा गया है।

अभिप्राय यह है कि बौद्ध दार्शनिक आत्मा को नहीं मानते हैं। अतएव रूप, वेदना, संज्ञा संस्कार तथा विज्ञान रूप पञ्चस्कन्ध क्लेश तथा कर्म से अभिसंस्कृत होकर गर्भ में

प्रवेश करता है और मरण के पश्चात् जब तक उपपत्ति या गर्भ में आगमन नहीं होता तब-तक "अन्तराभव" की दशा में रहता है।

नात्मास्ति, स्कन्ध-मात्रं तु क्लेशकर्माभिसंस्कृतम्।
अन्तराभवसन्तत्या कुक्षिमेति प्रदीपवत् ११-३-१८

अभिधर्म कोष की यह कारिका उक्त अभिप्राय को ही कहती है। प्रतीत्यसमुत्पाद का पहला अंग अविद्या विद्या का अभावरूप नहीं है। अपितु धर्मान्तर है। जन्ममरण प्रबन्ध का मूल मिथ्याज्ञान ही अविद्या है। संस्कार पूर्वजन्म की कर्मावस्था है। इसी संस्कार से स्कन्ध गर्भ में प्रवेश करता है। फलतः अविद्या और संस्कार पञ्चस्कन्ध को गर्भ में प्रवेश कराता है। कुक्षिगत स्कन्ध की पहली दशा विज्ञान-रूपी होती है, जो रूप, वेदना, संज्ञा, संस्कार तथा विज्ञान के बीज का वपन करती है अर्थात् यह तृतीय अंग रूप विज्ञान सूक्ष्म होता हुआ भी स्थूल दशा को अपने में अन्तर्हित रखता है। विज्ञान क्षण के पश्चात् षडायतन रूप स्थूल शरीर की उत्पत्ति पर्यन्त नामरूप अवस्था होती है। यहाँ पञ्चस्कन्ध के वेदना, संज्ञा, संस्कार और विज्ञान नाम पद से और रूप स्कन्ध रूप शब्द से अभिहित हुए हैं। इन दोनों या उन पाँचों का संग्रह नामरूप कहा जाता है। षडायतन से घ्राण रसना चक्षुष् श्रोत्र शरीर तथा मनस् अभिप्रेत है। जन्म के बाद जब षडायतन रूप में संघातमय शरीर का परिग्रह होता है तब पञ्चस्कन्ध की स्पर्श वेदना, तृष्णा, उपादान तथा भवरूप पाँच अवस्थाएँ होती है। सुख तथा दुःख की अनुभूति रूप वेदना की पूर्वावस्था यहाँ स्पर्श पद से कही जाती है। जब तक बालक सुख दुःख के अनुभव को व्यक्त करने में असमर्थ रहता है, तब तक की उसकी दशा स्पर्शदशा कही जाती है। मानस के साथ ज्ञानेन्द्रियों के और ज्ञानेन्द्रियों के साथ विषयों के संबन्ध होने पर जो ज्ञान उत्पन्न होता है, वही स्पर्श है। वेदना सुख या दुःख की अनुभूति है। तृष्णा पद से सौन्दर्य एवं सुन्दरी के प्रति आकर्षण एवं वैषयिक सुख भोग की लिप्सा ली जाती है। और इस भोग के लिए किया गया प्रयत्न या चेष्टा-विशेष यहाँ उपादान पदार्थ है। उपादान की स्थिति में सत्त्व पञ्चस्कन्ध चतुर्विध क्लेश का अनुभव करता है।

कृतकर्म के फलस्वरूप पुनर्जन्म के मूल कर्म की शक्ति ही भव पदार्थ है। भवत्यनेन इति भवः। अभिप्राय यह है कि गर्भावस्था से पहले पञ्चस्कन्धात्मक सत्त्व की जो अवस्था अविद्या एवं संस्कार द्वारा कही गयी है, जीवनदशा में जो अवस्था तृष्णा तथा उपादान पदों से कही गयी है, वही अवस्था अनागत जन्म में भव पद से अभिहित होती है। फलतः कालभेद से एक ही अवस्था भिन्न-भिन्न नामों से अभिहित होती रही है।

मरण के बाद प्रतिसन्धि या गर्भप्रवेश के समय जो अवस्था होती है, वही जाति पदार्थ है। अर्थात् गर्भावस्था में विज्ञान नाम से जिस अवस्था की बात कही गयी है, वही अनागत अर्थात् गर्भावस्था से पूर्व जाति पद से अभिहित होती है। ऐहिक जीवन के चार अंग नामरूप, षडायतन, स्पर्श तथा वेदना अनागत जन्म के लिए जरामरण रूप में

माने जाते हैं। फलतः कालभेद से ही यहाँ उक्त चार अंगों तथा जरामरण रूप नाम में भेद हैं। अभिप्राय में कोई भेद नहीं है।

इस तरह प्रतीत्य समुत्पाद का विशेष रूप से विवेचन करने वाला पुरुष स्वतः समझ जाएगा कि पञ्चस्कन्धात्मक सत्त्व निरन्तर परिवर्तनशील है। अतएव स्थिरपदार्थ ब्रह्म या आत्मा उसका स्थानापन्न नहीं हो सकता है। मज्झिमनिकाय में कहा गया है कि बुद्ध भगवान् ने कण्ठतः कहा है कि प्रतीत्य समुत्पाद को जो देखता है, वही धर्म को देखता है (म० नि० १३-१८) सांसारिक सभी घटनाएँ अपने नियत कारण से ही उत्पन्न होती हैं—यह धर्म है।

ये धम्मा हेतुप्पभवा हेतुं तेसं तथागतो आह।
तेसं च यो निरोधों एवंवादी महासमणो।
(ये धर्मा हेतुप्रभवास्तेषां हेतुं तथागतोह्यवदत्।
तेषां च यो निरोध एवं वादी महाश्रमणः॥

बौद्धाचार्य इस गाथा का बहुत आदर करते हैं। अतएव महायान ग्रन्थों की समाप्ति के अवसर पर नियम पूर्वक इसका कीर्तन किया गया है।

फलतः प्रतीत्यसमुत्पाद के द्वादश अङ्गों को आधार मान कर ही अनादि भवचक्र की बात बौद्ध दर्शनों में की गयी है। कर्मक्लेश के प्रत्यय से उत्पत्ति और उत्पन्न होने पर कर्म क्लेश का अनुभव इस तरह भवचक्र की अनादिता सिद्ध होती है

आचार्य नागार्जुन का शून्यवाद भी प्रतीत्यसमुत्पादवाद का ही नामान्तर है। माध्यमिककारिका में इन्होंने कहा है कि

यः प्रतीत्यसमुत्पादः शून्यतां तां प्रचक्षमहे।
सा प्रज्ञप्तिरुपादाय प्रतिपत्सैव मध्यमा॥ २४-१८

सभी व्यावहारिक वस्तुएँ सापेक्ष एवं समूहात्मक है। एक भी वस्तु निरपेक्ष नहीं है। जैसे रथ यह एक प्रज्ञप्ति है, जो घोड़ा, चक्र, धुरी, रस्सी आदि लेकर तैयार होता है। यह उपादाय प्रज्ञप्ति अन्वर्थनाम है। भाव शाश्वत रहेगा अभाव उच्छेद स्वरूप है। अतएव इन दोनों के भाव और अभाव की शाश्वत दृष्टि एवं उच्छेद दृष्टि के मध्य का मार्ग अपनाना चाहिए। यही है मध्यम मार्ग अथवा मध्यमा प्रतिपत्। फलितार्थ यह हुआ कि पदार्थ की सापेक्षता ही शून्यवाद है। यह शून्यवाद पारिभाषिक है, प्रतीत्यसमुत्पाद स्वरूप मध्यमा प्रतिपत् पदवाच्य है; अन्वर्थक नहीं है।

"मुख्यो माध्यमिको विवर्तमखिलं शून्यस्य मेने जगत्" इस कारिकांश का यही अभिप्राय है। ललितविस्तर में (पृ० २१०) एक पद है—

बीजस्य सतो यथाङ्कुरो न च बीजु सतैव अंकुरो।
न च अन्यु ततो न चैव तदेवमनुच्छेद अशाश्वत धर्मता॥

बीज से अंकुर होता है किन्तु बीज ही अंकुर नहीं है। बीज से भिन्न वस्तु भी अंकुर नहीं है। बीज स्थिर या शाश्वतिक नहीं रहता है, क्योंकि अंकुर रूप में उसका परिवर्तन होता है। बीज का उच्छेद भी नहीं होता है, क्योंकि बीज का रूपान्तर ही अंकुर है।

इस तरह बौद्ध धर्म का प्रतीत्य समुत्पाद वाद तथा आचार्य नागार्जुन का शून्यवाद सांसारिकता या बन्धव्यवस्था को उपपन्न करता है।

मग्गानट्ठङ्गिको सेट्ठो सच्चानं चतुरो पदा।
विरागो सेट्ठो धम्मनं द्विपदानां च चक्खुमा ॥ धम्मपद २०-९

अर्थात् निर्वाण के लिए अष्टाङ्गिक मार्ग श्रेष्ठ है, सत्यों में चार अभिसत्य श्रेष्ठ है, धर्मों में वैराग्य श्रेष्ठ है और मनुष्यों में (चक्षुष्मान्) भगवान् बुद्ध श्रेष्ठ हैं। इन आठ अंगों के नाम इस प्रकार हैं—सम्यक्दृष्टि, सम्यक् संकल्प सम्यक् वचन, सम्यक् कर्मान्त, सम्यक् आजीव, सम्यक् व्यायाम, सम्यक् स्मृति तथा सम्यक् समाधि।

दुःख, उसका कारण, उसका निरोध एवं इस निरोध के उपाय इन चार आर्यसत्यों का ज्ञान सम्यक् दर्शन पद से विवक्षित है। हेय, हान, अधिगन्तव्य तथा उपाय रूप चार अर्थतत्त्वों का उल्लेख न्यायभाष्य के आरम्भ में किया गया है जो मूलतः इन चार आर्यसत्यों से अभिन्न है और नैयायिकों को भी मान्य हैं। इसी को आचार्य वसुबन्धु ने प्रज्ञा अर्थात् प्रकृष्टज्ञान कहा है। सम्यक् संकल्प से अद्रोह, अराग तथा अहिंसा अभिप्रेत है, जो न्यायदर्शन में मानसिक शुभकर्म रूप में परिगणित है। मिथ्या, पैशून्य. असंबद्ध तथा कठोर भाषण को छोड़कर यथाभूत अर्थ का आख्यान सम्यक् वचन का अर्थ होता है, जो न्यायदर्शन का वाचनिक शुभ कर्म है। सम्यक् कर्मान्त से प्राणिवध, चौर्य तथा अवैध मैथुन का त्याग और समुचित आचरण अपेक्षित है, जो न्याय दर्शन का शारीरिक शुभकर्म है। निन्द्यवृत्ति, शस्त्र, जीव, मद्य मांस तथा विष आदि के विक्रय को छोड़कर सभी प्राणियों के अक्लेश से जीवन यापन का उपाय सम्यक् आजीव से अभिप्रेत है, जो सनातन न्याय शास्त्र के पक्षपातियों के लिए धर्मशास्त्रीय विधि एवं निषेध रूप आचरण से नियन्त्रित होता है। सम्यक् व्यायाम का तात्पर्य पाप की अनुत्पादिका, कृत पाप की अपुनरावृत्ति, पुण्य की उत्पादिका तथा कृतपुण्य की स्थिति रूप रुचि के प्रयास में है। न्यायदर्शन के आत्मसंस्कार से इसकी समानधर्मता आंकी जा सकती है। इसे नैयायिक की दृष्टि से अध्यात्मविध्युपाय कहा जा सकता है, जिसकी चर्चा ४-२-४६ सूत्र में महर्षि गौतम ने की है—"तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्म विध्युपायः"। सम्यक् स्मृति से राग निरोधक शरीर और वेदना की स्थिति अभिप्रेत है। न्यायदर्शन के अध्यात्मविध्युपाय में ही यह भी अन्तर्भूत हो सकती है। सम्यक् समाधिरूप अन्तिम अंग से राग का सर्वथा परिवर्जन तथा मनस् का शान्त होना अभिप्रेत है। बुद्धचरित के पञ्चदश सर्ग में ३८-४८ पद्यों में महाकवि अश्वघोष ने इन विषयों का विशद उपपादन किया है।

दुःख अंकुर स्थानीय है और बीज स्थानीय है परिवर्तनशील प्रत्यय। बीज से अंकुरोदय के निरोध के लिए जैसे बीज को भून दिया जाता है इसी तरह दुःख के हेतु तृष्णा का भर्जन आवश्यक है। वह भर्जन कपाल अष्टाङ्गिक मार्ग है जहाँ तृष्णा का भर्जन संभव है।

इस तरह संक्षेप में न्याय तथा बौद्ध दर्शनों में बन्ध एवं मोक्ष के स्वरूप एवं उपाय का दिक्प्रदर्शन यहाँ किया गया है। दोनों दर्शनों के विचारों की तुलना करते समय देखा जाता है कि सांसारिक बन्धन का मूल न्यायदर्शन में मिथ्याज्ञान को कहा गया है और बौद्धदर्शन में अविद्या या तृष्णा को। दोनों का तात्पर्य एक ही है। भवचक्र की अनादिता का क्रम एक जैसा ही है। इसकी प्राप्ति का उपाय भी एक जैसा ही प्रतिपादित हुआ है—तत्त्वज्ञान से मिथ्याज्ञान का नाश, मिथ्याज्ञान के अभाव में दोष का अनुत्पाद, दोष के अभाव में प्रवृत्ति का अनुत्पाद, इसके अभाव में जन्म का नहीं होना और जन्म के नहीं होने से भोगायतन के अभाव में दुःखभोग का नहीं होना सिद्ध होता है। इस तरह प्रमुख प्रमुख स्थानों में ठहराव दिखाकर नैयायिक उसी मार्ग से चलते आ रहे हैं, जिस रास्ते को बौद्धाचार्यगण अष्टाङ्गिक मार्ग कहते हैं।

इतना साम्य रहने पर भी दोनों दर्शनों के मल्ल प्रतिमल्ल भाव का कारण क्या है, इस जिज्ञासा की शान्ति के लिए कहना होगा कि न्याय दर्शन में आत्मा के साथ शरीर का परिग्रह रूप जन्म होता है। आत्मा विभु है, अतएव नित्य है, प्रतिशरीर में भिन्न है अतएव नाना माना गया है। किन्तु बौद्धदर्शन आत्मा को नहीं मानता है। पञ्चस्कन्ध या नामरूप अपनी शास्त्रनिर्दिष्ट प्रक्रिया से जन्म लेता है। वह समष्टि एक है या नाना अर्थात् प्रतिशरीरभेद के विषय में स्पष्टतः कुछ भी निर्देश नहीं है। इसी विषय पर सनातन न्यायशास्त्र के साथ बौद्धदर्शन की मुख्य प्रतिस्पर्धा देखी गयी है। और इसके अङ्ग रूप में एक शास्त्र के प्रतिपाद्य अपरशास्त्र में परस्पर खण्डित मण्डित होते रहे हैं।

न्यायदर्शन तथा बौद्धदर्शन विचार एवं आचार को समान रूप से महत्त्व देते हैं। अतएव अपवर्ग की अधिगति हेतु आत्मसंस्कार की बात न्यायशास्त्र में कही गही है। यम, नियम, ध्यान तथा धारणा आदि योगशास्त्र में विशेषरूप से प्रतिपादित आचार आत्मा के संस्कार के लिए, अन्तःकरण की विशुद्धि के लिए नैयायिक सम्प्रदाय में भी अपेक्षित है— "तदर्थं यम नियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्म विध्युपायैः" (४-२-४६) इस सूत्र का प्रतिपाद्य यही है। समाधि विशेष के अभ्यास से भी तत्त्वज्ञान संभव है। समाधि विशेषाभ्यासात् (४-२-३८) इस तरह का न्यायसूत्र अपवर्ग की परीक्षा के समय उपलब्ध होता है।

बौद्धदर्शन का अष्टाङ्गिक मार्ग भी आचार प्रधान ही है, यह अभी हम लोगों ने देखा। यहाँ नैरात्म्यवाद अभीप्सित है अतएव पञ्चस्कन्धात्मक नामरूप अपवर्ग लाभ करता है। फलितार्थ यह हुआ कि योगशास्त्रोक्त आचार के द्वारा नैयायिक दुःखमय संसार से मुक्त होते हैं और उसी से मिलते जुलते अष्टाङ्गिक मार्ग रूप सदाचार के द्वारा बौद्ध भी दुःखमय संसार से छुटकारा पाता है। उभयत्र बन्ध एवं मोक्ष की प्रक्रिया तथा स्वरूप समान ही हैं, यद्यपि एक आत्मवादी है आर दूसरा नैरात्म्यवादी। असल में एक ही भूमि की उपज तो दोनों दर्शन है, अतएव समानता तो स्वाभाविक है।

# SUP TIṄANTAM PADAM

( सुप् तिङन्तं पदम् )

Generally western grammarians put all the words which constitute a sentence into eight categories, namely : (1) Noun (2) Pronoun (3) Adjective (4) verb (5) Adverb (6) Preposition (7) conjunction (8) Interjection. All these are called 'parts of speech', because according to them it is speech or sentence, which is the actual entity. The above mentioned eight divisions are just for the purpose of study; they may be accepted as the functional division or classification of parts of speech.

Sanskrit grammarians have not finally agreed whether speech or language is an octoped spider, though language has been called *Sabda Brahma* or god who has been compared with a spider '*Yathorna nābhih srijate grihnate cha*'[1] ( Mundaka Upani sad–1-1-7 ), which creates and grips all beings into its web, so that they cannot free themselves from its grip, cannot stretch beyound its range. According to them Sanskrit, a devine language or speech is regarded as a quadruped, a cow, not an ordinary one, but a *Kamadhuk* or *Kamadhenu* (कामधुक्, कामधेनु), a divine cow, which gives not only abundant milk whenever you want, but any and every thing at will. It can materialise even he airy human imagination.

According to *Mahabhāshya, ( Paspashāhnik ) of Patanjali*, the famous Indian grammarian Yask has compressed all the above eight classes into four only, namely ( a ) *Nāma* ( b ) *Ākhyāta* ( c ) *Upasarga and* ( d ) *Nipāta*. Here *nama* includes

१. यथोर्णनाभिः सृजते गृह्णते च ।

Nouns, Pronouns and adjectives. *Akhyāta* denotes verbs. *Upasarga* and *Nipāta* include prepositions, adverbs, conjuctions and Interjections. *Nipāta,* could actually include *Upasargas* also, because *Upasarga* is only an important subdivision of *Nipāta*, but Yāska wants to keep them in a separate catagory purposely. As sementically they belong to two separate groups, ( 1 ) Upasargas have practically no specific and particular meaning, independent of the verb to which they are only prefixed, they affect the meaning of the verb, either enriching and expanding it as in *apaharati*, or contract it as in *samharati, Praharati, Pariharati* or alter it completely as in *upaharati, anuharati, viharati, gacchati–āgacchati, dadati–ādadati, jayati–parajayate* ete—( *Dhātwartham bādhate kaścit, kaścit tamanuvartate, tameva viśinaṣṭyanya upasarga gatistridhā.*)[1] *Nipātas* have got their independent meanings, as for example, *Ca* ( and ), *vā* ( or ), eva ( only ), evam ( like this ), nūnam ( certainly ), ma ( dont ), na ( no ), he ( o ) etc. ( 2 ) Upasargas are used only before the word, they qualify, Nipāṭas may be used either before or after it, as na *pathati, pathati na pathati va gacchati; pathati gacchati va, he Rāma, Rāma he etc.* ( 3 ) Besides *Upasargas* are always united with the verb uninterrupted, nipātas come before or after the qualified word and uninterrupted or interrupted.

So the *Kāmadhenu vak* or speech possesses four legs, *nāme* and *ākhyāta* are its two front legs ( or hands ) and *upasargas* and *nipātas* two hind legs or *para* and *pasyanti* hind and *madhyama* and *vaikhari* front feet. According to Nirukta *go* is a synonym of *vāk*. According to *manusmriti* this *vāk* cow gives four things, i.e. milk, Curd, butter and honey to him, who serves her at least for a year regularly and properly. The

१. धात्वर्थं बाधते कश्चित् , कश्चित् तमनुवर्त्तते । तमेव विशिनष्ट्यन्य उपसर्गं गतिस्त्रिधा ।

word *go* is a synonym of speech in vedic language also, But there are two shortcomings in this classification. First *upasargas*, as stated above, are all only a kind of *nipatas*, so they need not be enumerated separately. Secondly *Ṣvarādi*, for ex, *antah*, *prāth*, *punah*, ucchaih or bahir is neither *upasarga* nor *nipata*. So they should have been mentioned seperately. The division should be *nama*, *akhyata*, *svaradi* and *nipata*.

Due to this defect some have classified words into 3, i. e. (1) *nāma* (2) *ākhyāta* and (3) *avyaya*. *Avyaya* would include or comprise all the three, namely *prādi* or *upasargas*, *cādi* or *nipatas*, and *svarādi*. So *vāk* may be considered a three legged bull or *vṛṣabha*. It has been described as possessing three legs or *pādas* in Rgveda ( 4. 58. 3 ). Pānini has also recognised three categoires in his *Astadyayi* ( 4. 3. 72. and 2. 1. 6 ). The *padārthas* or meanings of *padas*, i. e., substances of the universe have been likewise classified into three i. e. Īśvara, Jīva and Prakriti. This is called traitavāda or trinity. Even each of these three has been classified into trinity. God or Īsvara into Brahmā, Viṣṇu and Mahesh; Soul or Jiva into *Mukta* or bond-free *Mumuksu* or freedom-seeker and *baddha* or bonded; and matter into Prakriti or pure originator, Prakriti-vikriti or originated originator and vikriti or purely originated. Even the world has been described three fold Swarga, Martya and Pātāl. *Sāvitri* also has got three feet, (1) Praṇava om, (2) mahāvyāhṛti (3) the gāyatri Ṛca. Mahavyahrti as well consists of three words Bhūh, Bhuvah, Swah or the earth, the sky and the heaven. Gāyatrī has got three feet ( 1 ) tat savitur vāreṇyam ( 2 ) bhargo devasya dhīmahi ( 3 ) dhiyo yo nah prachodayāt. Praṇava also consists of three letters, a, u, and m. Grammarians as well as Panini himself have recogniged three tenses, three persons, three numbers.

But Panini, the world renouned king of Grammarians, looked

